


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रिमासपत्रिका

एप्रेल् २०२१ .... रू.५/-

## ओण्टिमिट्ट श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवाः

२०२१ एप्रेल् २१ तः २९ पर्यन्तम्

तिरुमलतिरुपतिदेवस्थानम्

ओण्टिमिट्ट

# श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवाः

## २०२१ एप्रेल् २१ तः २९ पर्यन्तम्



२१-०४-२०२१ सौम्यवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - शेषवाहनम्

२२-०४-२०२१ बृहस्पतिवासरः
प्रातः - वेणुगानालङ्कारः
रात्रौ - हंसवाहनम्

२३-०४-२०२१ भृगुवासरः
प्रातः - वटपत्रशायिनः अलङ्कारः
रात्रौ - सिंहवाहनम्

२४-०४-२०२१ मन्दवासरः
प्रातः - नवनीतकृष्णालङ्कारः
रात्रौ - हनुमत्सेवा

२५-०४-२०२१ भानुवासरः
प्रातः - मोहिनीसेवा
रात्रौ - गरुडसेवा

२६-०४-२०२१ इन्दुवासरः
प्रातः - शिवधनुर्बाणालङ्कारः
रात्रौ - आह्वानम्, कल्याणोत्सवः
गजवाहनम्

२७-०४-२०२१ भौमवासरः
प्रातः - रथोत्सवः

२८-०४-२०२१ सौम्यवासरः
प्रातः - कालियमर्दनालङ्कारः
रात्रौ - अश्ववाहनम्

२९-०४-२०२१ बृहस्पतिवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्

# श्रीरामदासकीर्तनम्



प. भजरे मानस रामम्
भजरे मानस रामम् ।।भजरे।।
अ.प: करधृतशरकोदण्डम्
करितुण्डायितभुजदण्डम् ।।भजरे।।
च. दाशरथी नरसिंहम्
दाशरथी सुरसिंहम्
कौसल्याबहुभाग्यं रामम्
मैथिल्यालोचनयोग्यम् ।।भजरे।।

अवनतजलजभवेन्द्रम्
अगणितगुणगणसान्द्रम्
मायामानुषदेहं - मुनि
मानसरुचिकरवेषम् ।।भजरे।।
श्यामलजलधरश्यामम्
साम्बशिवानुतनामम्
भद्राचलनिधिवासं परि
पालित श्रीरामदासम् ।।भजरे।।

हे मनः नृसिंहकृष्णाद्यवतारपुरुषं श्रीरामं तत्तद्रूपेण भज रे भज इति भगवद्भजने चित्तप्रचोदकं सुललितसंस्कृतभाषाज्ञानामपि सुस्पष्टार्थभासकम् श्रीरामदासेन रचितं तेलुगुभाषाकीर्तनम्।

## गीतामृतम्



अर्जुन उवाच -
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत।।
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे।।
(भगवद्गीता २१-२२/१)

हे अच्युत! अमुष्मिन् युद्धोपक्रमे कैः सह मया युद्धं कर्तव्यम्? अतः युद्धकाङ्क्षया समवस्थितान् धृतराष्ट्रसम्बद्धान् यावत्कालं निरीक्षे तावत्कालं मम रथं उभयोः सेनयोः मध्ये स्थापय इति अर्जुनः श्रीकृष्णं प्रति आह इत्यर्थः।

# प्लवः शार्वरितारकः

युगादिः नाम भगवान् यस्मिन् दिने सृष्टिकार्यम् आरब्धवान् तद्दिनम् इति वदन्ति।

इदानीन्तनजगति नववर्षस्य आरम्भः इति यत् आचर्यते (जनवरि - १) तत्र नवता न दृश्यते। किन्तु चैत्रशुक्लप्रतिपदि तिथौ वृक्षाः नवीनपल्लविताः भवन्ति, स्वच्छवायुः वाति, सूर्यः उत्कृष्टकान्तिमान् भवतीत्येवंरूपेण पञ्चभूतेष्वपि किञ्चिन्नावीन्यम् अनुभवामः। तदा एव संवत्सरस्यारम्भः नूतनर्त्वारम्भोऽपि भवति।

अतः प्रजाः विविधदेशेषु विविधनामभिः विविधसम्प्रदायानुगुणं नववर्षस्योत्सवे मग्ना भवन्ति

"प्राप्ते नूतनवत्सरे प्रतिगृहं कुर्यात् ध्वजारोहणम्
स्नानं मङ्गलमाचरेत् द्विजवरैः साकं सुपूज्योत्सवैः।
देवानां गुरुयोषितां च शिशवोऽलङ्कारवस्त्रादिभिः
सम्पूज्यो गणकः फलं च शृणुयात्तस्माच्च लाभप्रदम्।। इत्युक्तदिशा।

आयुर्वेदानुसारं वसन्तर्तौ जायमानानां शारीरकविकाराणां निमित्तम् उत्तमम् औषधमस्ति निम्बकम्। निम्बूगुडयोः मिश्रणस्य खादनेन शरीरस्य समतोलनं साधितं भवति। "शतायुर्वज्रदेहाय सर्वसम्पत्कराय च। सर्वारिष्टविनाशाय निम्बकं दलभक्षणम्" अर्थात् निम्बकुसुमभक्षणेन पूर्णायुः भवति, शरीरं वज्रवद्दृढं भवति, सर्वसम्पत्प्राप्तिः, सर्वारिष्टविनाशोपि भवतीत्यर्थः। जीवनं नाम निम्बगुडमिश्रणमिव। तत्र माधुर्यं तैक्त्यं द्वयमपि भवतीत्यपि सन्देशं स्मारयति निम्बगुडमिश्रणम्। एतत् सुखदुःखयोः, अहोरात्रयोः, लाभनष्टयोः प्रीतिद्वेषयोः जयापजययोः सङ्केतमिव वा सर्वमपि जीवने समभावेन स्वीकुर्यात् इति ज्ञापयति।

अन्येभ्यः पर्वभ्यः परं अस्मिन् पञ्चाङ्गश्रवणम् अत्यवश्यम् कर्तव्यमेवेति वदन्ति वृद्धाः।

कुतः? - तिथि-वार-नक्षत्र-योग-करणानि पञ्चाङ्गानि। नवसंवत्सरारम्भे इति न, प्रतिदिनं ये तेषां नामान्युच्चरन्ति शृण्वन्ति च तेषां फलं वक्ति शास्त्रम् -

'तिथेश्च श्रियमाप्नोति वारादायुष्यवर्धनम्।
नक्षत्राद्धरते पापं योगाद्रोगनिवारणम्।
करणात्कार्यसिद्धिः स्यात् पञ्चाङ्गफलमुत्तमम्।। इति।

अस्माकम् आद्याः पूज्याश्च ऋषिमुनयः यत्किमपि वा कुर्युः तत्र किमपि प्रयोजनं भवत्येव इति चिन्तनीयम्।

यतः - "प्रभवो विभवः शुक्लः .... रक्ताक्षी क्रोधनोऽक्षयः" इत्येवं षष्टिसंवत्सराणां नामानि प्रोक्तानि ऋषिभिः।

तत्र विकारी नाम विकारः अस्ति अस्मिन् इति।

अत्र विकारो नाम - "विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च।।"

इति चरकसंहितोक्तदिशा दुःखम् इत्यर्थः।

एवमेव शार्वरिः नाम कोशोक्तदिशा रात्रिः अन्धकारो वा इत्यर्थः। किञ्च प्लवो नाम जलात् तारकः नौका इत्यर्थः।

एवञ्च विकारिनामसंवत्सरे करोना नामकप्रकृतिविकारेणाण्वादिना प्राप्तदुःखेन शार्वरिनामसंवत्सरे गृहैकनिवासाद्यन्धकारे विक्लिन्नान् सर्वान् तस्माद्दुःखात् तारयति अयं नूतनः प्लवनामसंवत्सररूपः प्लवः इति द्योतते।

अतः श्रीश्रीनिवासः उभयान्धकारनिवर्तकः अस्मिन् प्लवे प्लवं दत्वा प्लावयत्विति प्रार्थयामहे।

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०१

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः

# एप्रिल् २०२१

श्रीशार्वरिनामसंवत्सरस्य फाल्गुणकृष्णचतुर्थीतः
श्रीप्लवनामसंवत्सरस्य चैत्रकृष्णचतुर्थीपर्यन्तम्- १९४१



मुखचित्रम् - श्रीसीतासमेतश्रीकोदण्डरामस्वामिनः (ओण्टिमिट्ट)

अन्तिमरक्षापुटः - श्रीसीतालक्ष्मणसमेतश्रीकोदण्डरामस्वामिनः (तिरुपतिः)

गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.



## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# आचार्यं समुपास्महे

- डा.श्री लक्ष्मीनृसिंहः
चरवाणी - ९९४०५७१८०८



अहो विशिष्टः अस्माकं भारतदेशः यत् महात्मनामनेकानां विशेषजन्मभिः पुनः पुनः पवित्रीक्रियते निरन्तरम्। सामान्यं लौकिकजीवनमेव यापयित्वा सांसारिकदशायामेव पुनः पुनः निमज्य बाधामेव अस्मादृशाः अनुभवामः। कारणमज्ञानमेव। एतस्मिन् सन्दर्भे अस्माकमुद्धरणविषये भगवता दत्तः प्रसाद एव एकस्य महापुरुषस्य अवतारः भूमौ, विशिष्य भारते। स्वस्य तपसा, आचार्यानुग्रहेण भगवदाज्ञया च अस्मादृशान् भक्त्यादिभिरुपायैः ज्ञानदशां प्रति नेतुमेव एते क्रान्तिकारिणः तदा तदा अवतरन्तस्सन्ति। एतादृशाः महान्तः, साधुजनाः, ऋषयः, आचार्यपुरुषाः, भागवताः तथा योगिनश्च, भगवदवतारसमयेष्वपि जनित्वा, आसेतुहिमाचलं समग्रभारतदेशे तथा विश्वे च धर्मप्रचारं, भक्तिसम्वर्धनं कृत्वा स्वजीवनेन लोकोद्धारणं च कृतवन्तः इत्यस्माभिः ज्ञायते। एवमस्ति तेषां जन्मवैशिष्ट्यम्।

एतेषु केचन महात्मानः उचितेभ्यः जिज्ञासुभ्यः मार्गदर्शनं स्वशिष्टाचारेण तथा उपदेशेन कृतवन्तश्चेत्, अन्ये स्वशिष्टाचारेण सह योग-धर्म-भक्त्यादिविषयेषु उचितग्रन्थानपि विरच्य, उचितां गुरुपरम्पराम् अथवा आचार्यपरम्परां स्वयं निर्माय लोकोद्धारणं कृतवन्तः इत्यस्माभिः दृश्यत एव तेषां चरित्रावगमनसन्दर्भेषु।

पुनः एतेषाम् उत्तमजनानां वैशिष्ट्यम् ईदृशमस्ति यत् भगवान् श्रीमन्नारायण एव स्वस्य रामकृष्णाद्यवतारसन्दर्भेषु तादृशान् महापुरुषान् प्रति स्वयं गत्वा एतादृशानां जीवनवैशिष्ट्यं कीदृशमिति स्वयं स्ववाचा लोकजनेभ्यः बहुषु सन्दर्भेषु निवेदितवान् इति श्रीमद्रामायणे श्रीमद्भागवतादिदिव्यग्रन्थेषु च सप्रमाणं द्रष्टुं शक्यते।

कलौ खलु भविष्यन्ति नारायणपरायणाः।
क्वचित् क्वचिन्महाभागा द्रविडेषु च भूरिशः।।

(११-०५-३८)

इति श्रीमद्भागवतोक्तरीत्या अनेकानामाचार्यपुरुषाणां तथा भागवतोत्तमानां च जन्म विशेषतया भारतस्य दक्षिणभागे अधिकमभवत्, जायते, भविष्यतीति विशिष्टमेतत् क्षेत्रम्। यस्य आचार्यपुरुषस्य परम्परा अस्ति, या च तेन महापुरुषेण निर्दिष्टान् उपदेशान् तज्जीवनानन्तरमपि समानश्रद्धया तदुक्तदिशा एव अनुपालयति, सा अनुसरणयोग्या, श्लाघ्या विशिष्टतमा च।

**अचार्यवान् पुरुषो वेद** - इति सुवचनानुगुणम् आबाल्यात् अस्माकमाचार्यपुरुषः विद्याप्राप्त्यर्थं स्वस्य मातुलेन श्रीशैलपूर्णैः दर्शितपथः, स्वयं च विविधानचार्यतल्लजान् समाश्रित्य श्रीवैष्णवसिद्धान्तप्रतिष्ठापनार्थम् अनितरसाधारणानि प्रयत्नानि स्वीकृत्य अन्ते लक्ष्यं पूरितवानित्यनेन ज्ञायते आचार्यवैभवं कीदृशमिति।

भगवदुपासनार्थं प्रयतमानेभ्यः साधकेभ्यः सन्ति मन्त्रजप- तीर्थाटन-देवालयदर्शन-पूजाविधान-दानकर्माद्युपायाः अनेके। परमाचार्योपासनं तावत् भिन्नं, न सर्वजनसाधारणञ्च। एतादृशमनितरसाधारणं आचार्योपासनं कथम् अस्माकं जीवने भवितव्यं, निरन्तरसेवनेन आचार्यानुग्रहः कथमस्मादृशान् उत्तममार्गे नीत्वा पुरोगतिं विदधाति इत्येतत् सर्वमपि स्वस्य जीवने अनेकेषु सन्दर्भेषु निरूपितमस्ति अस्माकं आचार्यवर्यैः, विशिष्य गोष्ठीपूर्णात् आचार्यवर्यात् परमोत्कृष्टरहस्यत्रयतत्वस्य प्राप्तिसन्दर्भे।

**''यदा यदा हि धर्मस्य ग्लानिर्भवति भारत''** - इति भगवता एव प्रोक्तं यत् धर्माचरणस्य तदा तदा आपदः सम्भवन्त्येव इति। विशिष्य अस्माकं यतीन्द्राणामवतारकाले बौद्ध-जैनानामवैदिकप्रचाराधिक्यं, हूनानां भारतदेशे आक्रमणं, दुष्टशासकानाम् आग्रहः, जनानां मध्ये भक्तिह्रासः इत्यादिकाः बाधाः आसन् देशे सर्वत्र। एतादृशसमस्याः अनेकाः तथा शारीरक- मानसिक श्रमान् तपसा सहनशक्त्या निष्ठया तथा अचार्योपासनेन सोढ्वैव अन्ते स्वस्य लक्ष्यं पूरितवानस्माकमाचार्यसार्वभौमः इत्यत्र नास्ति संशयः। काल-देश-युगपरिवर्तनानुगुणं समुदायेऽपि परिवर्तनं तदा तदा भवत्येव, विशिष्य जीवनव्यवहारेषु। एतत् सर्वं समालोच्यैव आचार्यवर्येण देशे सर्वत्र उत्तरात् दक्षिणं प्रति, प्राच्याः पश्चिमां प्रति कठिनप्रयासेन प्रयाणं कृत्वा तत्र तत्र विद्यमानाः विविधाः देवालय-कुलाचार-सम्प्रदायधर्माचरण भक्त्यनुष्ठानादीनां सम्बन्धिसमस्याः प्रथमं सम्यगवगत्य परिशील्य ताः सात्विकरीत्या निवारितवन्त इत्यस्ति वैभवं तेषाम्। उदाहरणतया दिल्लीपर्यन्तं गत्वा सम्पत्कुमारनामकस्य भगवतः अर्चावताविग्रहानयनं, यादवप्रकाशेन स्वयं रामानुजाचार्यस्य चरणौ शिष्यत्वग्रहणम् इत्यादीन् उदारणत्वेन वक्तुं शक्नुमः।

यादवप्रकाशस्य अधीने विद्यामभ्यस्तुं गतस्य रामानुजस्य स्थितिः भिन्ना। परं तदधीने विद्यामध्येतुमागतानां तच्छिष्याणां संरक्षणं कथं आचार्यवर्यैः कृतम् इति वयं कूरेश-रामानुजसम्बन्धादवगन्तुं शक्नुमः। आचार्यवर्यैः स्वयमेव द्विसप्ततिसंख्याकान् वरेण्यान् शिष्यान् सञ्जीकृत्य धर्मसंरक्षणेन सह श्रीवैष्णवसम्प्रदायस्यापि रक्षणं कृतवानस्तीति वैशिष्ट्यम् अस्याः आचार्यपरम्परायाः।

यन्निमित्तं येषु पुण्यक्षेत्रेषु आचार्येण दिव्ययात्रा कृता तत्सर्वं दिग्विजययात्रात्वेन वक्तुं शक्यते। उभयवेदान्तस्यापि संरक्षणं कृतमित्यस्ति विशेषता आचार्याणाम्। भगवद्रामानुजाचार्यस्य जन्म तावत् अनितरसाधारणं, यदवतारत्वेन परिगणय्य तदनुयायिभिः सम्मान्यते समाराध्यते च अधुनापि। स्वस्य आचार-व्यवहार-धर्माचरणैः, परम्परासंरक्षणोपायैः तथा स्वविरचितवैष्णवसिद्धान्तग्रन्थैश्च युगावतारप्रशस्तिमापन्नोऽयम् महापुरुषः देशे सर्वत्र व्यापृतकीर्तिस्सन् विराजते जनानां हृदये सहस्रवर्षाणामनन्तरमपि इत्यत्र नास्ति संशयः।

भगवदतारत्वेन परिगणितस्य श्रीरामानुजाचार्यस्य वैभवं देशे सर्वत्र श्रीवैष्णवाः नानाविधप्रकारैः समाचरन्ति। देवालयेषु विविधाः उत्सवाः, तद्रचितग्रन्थानां पठनं, पाठनं सरलव्याख्यानैः सह तदीयग्रन्थानां मुद्रणं, बालक - बालिकासमूहेषु आचार्यचरितस्य वैशिष्ट्यप्राचरः, मूर्तिनिर्माणं, वेद-वेदान्तसंरक्षणमित्याद्यनेकानि कार्याणि प्रचलन्त्येव निरन्तरम्।

सन्त्यनेकाः घटनाः तज्जीवनसम्बन्धिन्यः वक्तुं वर्णयितुं वा विस्तरेण। परमस्माकं कर्तव्यमित्यपि अस्ति किञ्चित् भिन्नम्। तदुपदेशानुगुणं पूर्वाचार्याणां सदुपदेशेषु अचञ्चलां श्रद्धाम् आजीवनं निधाय, इतिहास-पुराण-भगवद्गीता-ब्रह्मसूत्रादीन् तथा आचार्यलिखितान् दिव्यग्रन्थान् यथाशक्ति अधीत्य, बालक-बालिकानां हृदयेषु भगवद्रामानुजाचार्यस्य दिव्यचरितं, तदुपदेशांश्च उचितरूपेण संस्थाप्य, समुदाये श्रीमन्नारायणपदमाश्रितैः तद्भक्तैः सह भेदभावान् विना ऐक्यजीवनं यापयित्वा, स्वजीवने भक्तेः प्रपत्त्याः च अनुष्ठानं स्थिरमानीय, निगमागमसंरक्षणं कृत्वा आदर्शजीवनं यापयामश्चेदेव भगवदनुग्रहार्थं तथा आचार्यानुग्रहार्थं च पात्रभूताः भवेम इत्यत्र नास्ति संशयः।

।।अनघामाचार्यसन्ततिं वन्दे।। 

# नवधा भक्तिः

- डा.केशवप्रपन्न पाण्डेयः
चरवाणी - ८१२४९७०३१६



**भज इत्येष वै धातुः सेवायां परिकीर्तितः।**
**तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी॥**

बुद्धिपूर्विका चित्तवृत्तिरियं भक्तिः भज सेवायां इत्यस्माद्धातोः निष्पन्ना भज्यन्ते सेव्यन्ते च बहुभिः पदार्थैः देवताः इति व्युत्पत्त्या भवति। भक्त्यानया तत्र भक्तैः बहुविधकैङ्कर्यादिभिः मनोवाक्कायैः स्वेष्टदेवताविषयक भक्त्यनुकूललौकिकालौकिकफलप्राप्त्याशया वन्दिताः ब्रह्मादयो देवाः ऐहिकपारमर्थिकफलप्रदानैः तन्मनस्कामनाः पूरयन्ति। तादृशी भक्तिरियं ऐहिकामुष्मिकफलकामनया आचर्यमाणा बहुभिरवान्तरभेदैः स्मृतीतिहासपुराणादिषु वर्णिता।

सामान्यतः लोके भक्तिरियं पूज्येषु आत्मीयजनेषु अनुराग इति विशेषार्थं जनयति। परं पारलौकिकदृष्ट्या भगवद्विषये परमप्रेमत्वेनाख्याता उपासनेत्युक्ता। सा चेयं भक्तिः परमप्रीतिरुपा शास्त्रेषूक्ता। विष्णुपुराणे यथा -

**नाथ! योनिसहस्रेषु येषु येषु व्रजाम्यहम्।**
**तेषु तेष्वच्युता भक्तिः अच्युतेऽस्तु सदा त्वयि।**
**या प्रीतिरविवेकानां विषयेष्वनपायिनी।**
**त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु॥**

कारिकार्थः - हे नाथ! यादृशी प्रीतिरासक्तानां अविवेकिनां लौकिकादिविषयेषु गभीरा भवति तादृशी परमप्रीतिरूपेयं भक्तिः त्वयि मे सर्वदात्यन्तगभीरतया सर्वेष्वपि जन्मसु एकान्तिनी अक्षुण्णा च भूयादिति प्रार्थना। अत्र परमप्रीतिरूपया भक्त्या सम्पन्नोऽहं त्वामजस्रमनुस्मरन् सर्वेष्वपि जन्मसु भवत्कैङ्कर्यं वाञ्छामि अतो हृदयान्मे न जात्वप्यपसर्पतु इति प्रार्थयामि। भगवद्विषये परमप्रीतिरूपा एतादृशी भक्तिः निःस्वार्थभावेन केवलं भगवतश्चरणारविन्दयुगलमेवोपायोपेयत्वेन वरीतुं भक्तोऽच्युतां शाश्वतीं भक्तिं भगवन्तमच्युतं प्रार्थयति। अच्युता भक्तिरपि भगवत एवाधीना इत्यतः भगवतस्सकाशादेव प्रार्थिता।

भगवद्विषये निरन्तरं तिलतैलधारावदविच्छिन्नतया कैङ्कर्यादिप्रधानभूताचरणै र्भक्तेरनुष्ठानस्य मुख्यं प्रयोजनं तावत् लोके जायमानस्यात्यन्तिकदुःखस्य निवृत्तिः भगवतो मुखारविन्दस्योल्लासश्च ततो देहावसाने भगवतो निर्हेतुककृपया श्रीमद्वैकुण्ठाख्यं शाश्वतं तद्धाम प्राप्य तत्र तत्सामीप्यं सारूप्यं सायुज्यञ्चावाप्य शाश्वतं तद्दिव्यकैङ्कर्यं लभमानो नित्यं तेनैव सह रमते नन्दति इति शास्त्रम्। यथा परमार्थश्लोकद्वये -

**सत्सङ्गाद्भव निस्पृहो गुरुमुखाच्छ्रीशं प्रपद्यात्मवान्**
**प्रारब्धं परिभुज्य कर्म सकलं प्रक्षीणकर्मान्तरः।**

न्यासादेव निरङ्कुशेश्वरदयानिर्मूलमायान्वयो
हार्दानुग्रहलब्धमध्यधमनिद्वारा बहिर्निर्गतः॥
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन् परब्रह्मणः
सायुज्यं समवाप्य नन्दति समं तेनैव धन्यः पुमान्॥

तत्र परमपुरुषार्थरूपं मोक्षमवाप्तुं परमसाधनैकरूपां भक्तिमिमां अनेकेआचार्याः अनेकेषु ग्रन्थेषु अनेकासु संख्यासु सलक्षणोदाहरणैः चक्रिरे। तत्र भक्तेरस्याः महिमानं प्रकटयन्तः स्वयं गीताचार्याः गीतायां -

**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः** इत्यनेन भक्तिवैशिष्ट्यं स्पष्टम् ऊचुः अन्येषु अपि ग्रन्थेषु भक्तेरस्याः लक्षणाणि आचार्यैः प्रोक्तानि तानि यथासन्दर्भमत्र प्रस्तूयन्ते।

**शाण्डिल्ये -** "सा भक्तिः या परानुरक्तिरीश्वरे"

**नारदीये -** "सात्वस्मिन् प्रेमरूपा भक्तिः"

**गार्ग्ये -** "भगवत्कथास्वनुप्रीतिः तद्भजनकीर्तनञ्च भक्तिः"

तदनु शङ्कराचार्याः भक्तेः ज्ञानात्मकलक्षणं प्रतिपाद्य तत्स्वरूपानुसन्धानमेव भक्तिरित्याहुः।

**यथा विवेकचूडामणौ -**

**मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी।**
**स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते॥**

**रामानुजाचार्याः -** "स्नेहपूर्वकमनुध्यानं भक्तिरित्युच्यते।"

**गौतमीये -** "मन्त्रे तद्देवतायाञ्च तथा मन्त्रप्रदे गुरौ भक्तिः यस्य तस्य कृष्णः प्रसीदति"। एतैरेव अष्टविधा भक्तिरपि प्रोक्ता नाम्ना तत्सङ्कीर्तनमत्र क्रियते।

**मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम्।**
**स्वयमभ्यर्चनं चैव मदर्थे दम्भवर्जनम्॥**
**मत्कथाश्रवणे भक्तिः स्वदनेत्राङ्गविक्रिया।**
**ममानुस्मरणं नित्यं यच्च मां नोपजीवति॥**

**भक्तिरष्टविधा ह्येषा** इति क्रमेण अष्टविधा भक्तयः प्रोक्ताः।

श्रीमद्भागवते सप्तमखण्डस्योत्तरे शिवपार्वतीसंवादे षोडशविधा भक्तिराख्याता यथा -

**आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः।**
**धारणञ्चोर्ध्वपुण्ड्राणां तन्मात्राणां परिग्रहः॥**
**अर्चनञ्च जपो ध्यानमित्यारभ्य तुलसीरोपणं विष्णोः देवदेवस्य शार्ङ्गिणाः। भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये"**

इत्यनेन यावत् समाप्तिमेति॥

तत्रैवापरत्र श्रीमद्भागवतस्य सप्तमे स्कन्धे महात्मना भक्तप्रह्लादेन सर्वविदिता सर्वप्रसिद्धा नवविधा भक्तिः प्रोक्ता। कारिका यथा -

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥**

इति पुंसार्पिता भक्तिः विष्णौ नवधेत्युक्ता। साम्प्रतं शीर्षकानुसारं नवधा भक्तेरस्याः एकैकस्यापि अङ्गस्य यावदपेक्षितं स्वरूपमुदाहरिष्यते ततः प्रागेताभिः भक्तिभिः परिपूर्णानां भक्तानां वैशेष्यं कारिकयानया मनागिवात्र प्रस्तूयते।

**आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान्।**
**सदा परगुणाविष्टो द्रष्टव्यः सर्वदेहिभिः॥**

**विवरणम् -** सदा भगवदनुभवप्रीतिपरवशः, शीतलः, सततं श्रवणपुटाभ्यां भगवद्गुणगणामृतपानैः सजलनेत्रः, तदनुभवेन पुलकीकृततनुश्च भक्तः सर्वदेहिभिः आत्मनः धन्यं कर्तुं सदा द्रष्टव्य इति अभिप्रायः। भगवांस्तु कर्मज्ञानभक्तिनिष्ठैरेव द्रष्टव्यो भवति, परन्तु एते हि भागवतोत्तमाः भक्ताग्रेसराः सदा सर्वदेहिभिः ज्ञानिभिः अज्ञानिभिश्चापि आत्मोन्नतये द्रष्टव्याः इत्यनेन महात्मनां भक्ताग्रणीनां वैशिष्ट्यमाह।

तत्र भागवतोत्तमानां वैशेष्यमपि परं विद्यते। स्वस्मै किमपि अयाचमानाः एतादृशाः भक्तश्रेष्ठाः परमपुरुषार्थं मोक्षमपि विस्मृत्य सदा भगवतो दिव्यमङ्गलविग्रहमङ्गलशासने निरता दृश्यन्ते। यथा द्वादशसूरिष्वन्यतमः श्रीभट्टनाथसूरिः यो भगवन्तं श्रीमन्नारायणं स्वपुरतो विद्यमानमपि इतरभक्तवत् मोक्षमपि परमपुरुषार्थं न प्रार्थयामास किन्तु भगवन्!

कलिकलुषेऽस्मिन् लोके मद्विलोकनायागतस्य तव को वानर्थः समापतेदिति शङ्कितः 'शतञ्जीव' इति भगवतो मङ्गलशासनं चकार। एतादृशाः भगवद्भक्ताः भगवतोऽत्यन्तप्रियाः तस्यात्मान इति कथ्यन्ते। तेषां विशेषवैशिष्ट्यानि शास्त्रेष्वनेकत्र प्रदर्शितानि। भगवद्गीतायामेव **अर्तोजिज्ञासुरर्थार्थी ज्ञानी** इति चतुर्विधाः सुकृतिनः भक्ताः प्रोक्ताः तेषु ज्ञानी यो भक्तः स भगवतोऽत्यन्तप्रिय इत्युक्तं यथा -

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानीनोत्यर्थमहं स च मम प्रियः।।**

मयि एकस्मिन्नेव भक्तिः यस्य ज्ञानिनो भक्तस्य तस्याहमत्यर्थं प्रियः स च ममात्मा भवति। मयापि सर्वशक्तिना स कियान् प्रिय इति अभिधातुं शक्यत इति भगवद्रामानुजकृतगीताभाष्ये परिभाषितम्।

एतादृशानां भक्तानां निवासस्थानमपि विष्णुपदसमत्वेनोक्तम्।

**यथा पाराशर्ये -**

**महाभागवता यत्र वसन्तो विमलाः शुभाः।**
**तद्देशं मङ्गलं प्रोक्तं यथा विष्णुपदं शुभम्।।**

**अपरत्र शाण्डिल्ये -**

**यत्र भागवताः नित्यं पञ्चकालपरायाणाः।**
**निवसन्ति सदा युक्ताः तत्क्षेत्रं नैमिषाद्वरम्।** इत्याभ्यां पद्याभ्यां भगवद्भक्तानां तन्निवासक्षेत्राणाञ्चात्यन्तोत्कृष्टत्वं प्रकटीकृतम्। भगवन्निवासस्यैव प्रायशो दिव्यक्षेत्रत्वेनाह्वानं किन्तु विमलमनसां सप्तभगवद्गुणानुभवरतानां भक्तानां निवासक्षेत्रमपि दिव्यदेश एवेत्येतैः पौराणिकैः प्रमाणैरुररीकृतम्।

प्रागुक्तप्रकारेण साम्प्रतम् एतादृशाः भक्ताः नवधा भक्तीनां यथाक्रमं दृष्टान्तभूताः नवभक्ता इति प्रख्याताः क्रमेण प्रस्तूयन्तेऽत्र। नवधा भक्तिरियं भारतीयभक्तिपरम्परायां भक्तिदर्शनग्रन्थेषु वा तत्तत्सम्प्रदायानुसारं महता वैभवेन प्रतिपादिता। अतः प्रामुख्येन एतां नवसंख्याकां भक्तिमवलम्ब्य तत्तल्लक्षणोदाहरणपूर्वकं स्वरूपं प्रस्तौमि।

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।** इति नवधा भक्तिः।

**श्रवणम् -** भगवतो विभवाद्यवतारेषु कृतानां दिव्यलीलादिचेष्टितानां परमश्रद्धया श्रवणपुटाभ्यां परमानन्देनात्मानं विस्मृत्य श्रवणम्।

**महाराजः परीक्षितः** एतस्याः भक्त्याः दृष्टान्तत्वेनोक्तः। परीक्षितमहाराजः स्वसकलराज्यभोगादिसमृद्धीः परित्यज्य शुकमहर्षेः सन्निधिं प्राप्य भगवतो देवदेवस्य नारायणस्य श्रीमद्भागवते वर्णितां मधुरां कथां करणत्रयेणापि श्रद्धया तन्महर्षिमुखारविन्दाच्छृणोति। अत एतादृशं भगवत्कथाश्रवणे महान्तं श्रद्धावन्तं परीक्षितमहाराजं दृष्टान्तत्वेनोचुः।

**कीर्तनम् -** भगवद्दिव्यकल्याणगुणगणादीन् अनन्यभावेन सम्यगनुभूय तदनु तदनुभवजनितज्ञानामृतेन एकान्ते वा तदीयेषु श्रद्धावत्सु भगवद्भक्तेषु वा तत्कथामृतसङ्कीर्तनं, उच्चैः तद्दिव्यनाम्नां भजनञ्च कीर्तिनत्मिका द्वितीया भक्तिरुक्ता।

**शुकमहर्षिः -** एतस्याः भक्त्याः उग्रहरणभूतो भवति महर्षिरयम्। भगवदसंख्येयकल्याणगुणगणमयीं महापुराणत्वेन आख्यातां श्रीमद्भागवतकथां स्वशरणमापन्नं परीक्षितमहाराजं निर्हेतुककृपया तदात्मोद्धाराय कीर्तयाञ्चकार। कीर्तनभक्तेरनुगुणं किञ्चन प्रसिद्धं पद्यं यथा -

**आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः।**
**संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति।।**
इति स्पष्टम्।

(अवशिष्टम् अग्रिमसञ्चिकायाम्)

# तिरुमल श्रीवेङ्कटेश्वरस्वामिनः वसन्तोत्सवः।

एप्रेल् २४ तः २६ दिनाङ्कपर्यन्तम्



....file photos

# गोविन्दनामक्रमे श्रीरामानुजनामानि





अष्टभुजसेवक रामानुज!
अनन्तरूप रामानुज!
अनाथरक्षक रामानुज!
अमृतमूर्ते रामानुज!
अद्भुतरूप रामानुज!
अधर्मशत्रो रामानुज!
आश्रितरक्षक रामानुज!
आनन्दरूप रामानुज!
आदिशेष रामानुज!
रामानुज श्रीयतिराजा!
यतिराज श्रीरामानुज!
आपद्बान्धव रामानुज!
उदयवर श्रीरामानुज!
करुणान्तरङ्ग रामानुज!
कलिध्वंसक रामानुज!
कल्पवृक्षसम रामानुज!
दासपावन रामानुज!
धर्मसंस्थापक रामानुज!
दाशरथिगुरो रामानुज!
दीनजनोद्धार रामानुज!
रामानुज श्रीयतिराजा!
यतिराज श्रीरामानुज!
दीनशरण्य रामानुज!
दीनदयालो रामानुज!
दीनबन्धो रामानुज!
देवराजप्रिय रामानुज!
काषायांबर रामानुज!
कारुण्यजलधे रामानुज!
रामानुज श्रीयतिराज!
काषायांबर रामानुज!

यतिराज श्रीरामानुज!
कामधेनो रामानुज!
कामादिहर रामानुज!
कामितफलद रामानुज!
कान्तिमतीसुत रामानुज!
कूरेशपूजित रामानुज!
केशवतनय रामानुज!
गद्यत्रयकर रामानुज!
गोपीमोक्षद रामानुज!
रामानुज श्रीयतिराज!
यतिराज रामानुज!
गोदाग्रज श्रीरामानुज!
तिरुप्पुळियाळ्वार रामानुज!
त्रिदन्डधारिन् रामानुज!
दयासिंधो रामानुज!
पुराणपुरुष रामानुज!
पुरुषपुङ्गव रामानुज!
पुण्डरीकाक्ष रामानुज!
पेरियनम्बिच्छात्र रामानुज!
बलभद्र जय रामानुज!
रामानुज श्रीयतिराजा!
यतिराज श्रीरामानुज!
भक्तजनप्रिय रामानुज!
भवभयहर रामानुज!
भक्तमन्दार रामानुज!
देशिकेन्द्र रामानुज!
नित्यनिर्मल रामानुज!
परमदयालो रामानुज!
पश्चाचार्यपदाश्रित रामानुज!
नित्यनिर्मल रामानुज!

परांकुशसेवक रामानुज!
रामानुज श्रीयतिराज!
यतिराज श्रीरामानुज!
परमहंस रामानुज!
पावनपुरुष रामानुज!
पापविमोचन रामानुज!
फणिशरीर रामानुज!
प्रियंवद श्रीरामानुज!
यतिराज श्रीरामानुज!
यामुनाप्रिय रामानुज!
रङ्गनाथपुत्र रामानुज!
लक्ष्मणमुने रामानुज!
लीलामानुषविग्रह रामानुज!
वरदराजसुत रामानुज!
रामानुज श्रीयतिराज!
यतिराज श्रीरामानुज!
वीराधिवीर रामानुज!
वैष्णवप्रिय रामानुज!
शङ्खचक्रप्रद रामानुज!
शारदाशोकनाश रामानुज!
शिष्टरंजन रामानुज!
शिष्टपरिपाल रामानुज!
श्रीभाष्यकर्तः रामानुज!
श्रीरामानुज रामानुज!
श्रीलक्ष्मणार्य रामानुज!
श्रीरङ्गप्रिय रामानुज!
रामानुज श्री यतिराज!
यतिराज श्रीरामानुज!
भक्तवत्सल रामानुज!
भागवतप्रिय रामानुज!
भक्तवत्सल रामानुज!

भाषासन्नुत रामानुज!
भुवनपावन रामानुज!
भूरिदयानिधे रामानुज!
भूतपुरीश रामानुज!
मन्नाथ जय रामानुज!
रामानुज श्रीयतिराज!
यतिराज श्रीरामानुज!
मन्त्रप्रकाश रामानुज!
मुक्तिदायक रामानुज!
मेषार्द्रासंभव रामानुज!
श्रीरामसोदर रामानुज!
श्रीरङ्गाश्रित रामानुज!
श्रीकृष्णाग्रज रामानुज!
श्रीभाष्यकार रामानुज!
शेल्वपिल्लजनक रामानुज!
श्वेतवर्ण रामानुज!
शेषावतार रामानुज!
शोकनाशन रामानुज!
सहस्त्रनामन् रामानुज!
सत्यसङ्कल्प रामानुज!
सज्जनप्रिय रामानुज!
साक्षीभूत रामानुज!
सुदीर्घबाहो रामानुज!
सुगुणाकर रामानुज!
सूरिशिखामणे रामानुज!
सौशील्यभूष रामानुज!
क्षान्तिवर्धन रामानुज!
क्षीरपुरीश रामानुज!
रामानुज श्रीयतिराज!
यतिराज श्रीरामानुज!
यतिराज श्रीरामानुज!



२५-०३-२०२१ दिनाङ्के ति.ति.दे. पालकमण्डल्या प्रत्येकाह्वानयोग्यत्वेन नियमितेभ्यः श्री मल्लादि विष्णु (विजयवाड सेन्ट्रल् शासनसभ्याः) महोदयेभ्यः श्री श्रीनिवासचित्रपटप्रदातारः ति.ति.दे अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महाभागाः



महाशिवरात्रिसन्दर्भे आचरिता: तिरुमलक्षेत्रपालकस्य रुद्रस्य विशेषपूजाः





श्रीकाळहस्तीश्वरब्रह्मोत्सवाङ्गतया ति.ति.दे. पक्षतः वस्त्रसमर्पकाः ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस्. महोदयाश्च



मन्त्रालयाधीशस्य श्रीगुरुराघवेन्द्रस्वामिनः ४२६ तमे वर्धन्त्युत्सवे श्रीस्वामिनः शेषवस्त्रसमर्पकाः ति.ति.दे. अधिकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि महोदयाः



ति.ति.दे. पक्षतः तिरुमलक्षेत्रे आचरिते श्री अनन्तळवार् ९६७ तमावतारोत्सवे श्री श्री श्री पेद्दजीयर् स्वामिनः, श्री श्री श्री चिन्नजीयर् स्वामिनः, ति.ति.दे. हिन्दूधर्मप्रचारपरिषत्कार्यदर्शिनः आचार्य के.राजगोपालन् महोदयः, अनन्ताळवार्वंशीकाः च भागिनः अभवन्।



# श्रीरामनवमी

- श्री वि.प्रदीपाचार्यः
चरवाणी - ९४९१६४६५३२

''पुनर्वस्वर्क्षसंयुक्ता सा तिथिः सर्वकामदा'' (अगस्त्यसंहिता ८-२८) इत्युक्तदिशा नवमीतिथिना सह पुनर्वसुनक्षत्रमपि यस्मिन्दिने भवति तद्दिनं प्रशस्तम्।

किञ्च

**चैत्रे नवम्यां प्राक् पक्षे दिवा पुण्ये पुनर्वसौ**
**उदये गुरुगौरांश्चोः स्वोच्चस्थे ग्रहपञ्चके।**
**मेषे पूषणि सम्प्राप्ते लग्ने कर्काटकाह्वये**
**आविरासीत्सकलया कौसल्यायां परः पुमान्।।**

इत्युक्तदिशा चैत्रशुक्लनवम्यां पुनर्वसु नक्षत्रे अयोध्या एव राजधानी यस्य तस्य कोसलदेशस्य राज्ञः इक्ष्वाकुवंशोत्पन्नस्य दशरथमहाराजस्य पुत्ररत्नमेवायं श्रीरामः कौसल्यायां जातः।

अतः एतद्दिनं श्रीरामनवमीनाम्ना कीर्त्यते। सर्वपर्वसु विहितमिव अस्मिन् पर्वणि अपि किञ्चन व्रतं विहितम्। तदपि तत्तद्देशाचारविधानादिभिः आचर्यते सर्वैः।

रामः एकः सामान्यमनुजः खलु? तस्य जन्मदिनं पर्व इति कुतो वदन्तीति चेत्? उच्यते। श्रीमहाविष्णोः प्रसिद्धमत्स्यादिदशावतारेषु सप्तमः। अयं मनुष्यरूपेणाप्युत्तमोत्तमः।

तथाहि: -

कीकसायाः पुत्रः दशकण्ठः **''देव-गन्धर्व-यक्ष-राक्षसादिभिः अवध्यत्वं स्यात्''** इति वरं चतुर्मुखात् प्राप्य, देवान् जित्वा, मुनीन् सर्वांश्च पीडयति सति रावणस्य संहारार्थं सुराणां प्रार्थनानुरूपं श्रीमहाविष्णुरेव रामरूपेण अवततार इति कथितम् -

**एवमुक्तस्तु देवेश....तुष्टुवुर्मधुसूदनम्।**

(वा.रा-बा.का- सर्ग.१५-(२६-३२ श्लोकाः)

**राक्षसं मधुहन्तरां...यदहं विमुखीकृतः।।**

(वा.रा.बा.का.सर्ग.७६-(१७-१९ श्लोकाः)

**विष्णोरर्धं महाभागं...** इत्यादिषु।

अस्मिन् रामे आदर्शपुत्रत्वम्, आदर्शभ्रातृत्वम्, आदर्शभर्तृता, आदर्शनृपत्वम्, आदर्शशिष्यत्वादयः अनेके उन्नतगुणाः सन्ति।

कैकेयीदेव्याः दशरथेन दत्तवरप्रकारेण अरण्यं गत्वा स्वपितृवाक्यस्य सत्यत्वं आरक्षयत्, एवं कैकेयीवरवशादेव वनवासः प्राप्तः इति विज्ञायापि विनयविधेयैः मातृणां नमस्कारं कृत्वा वनम् अगच्छत्। एवं मातापित्रोः सन्निधौ यथा प्रवर्तनीयमिति प्रदर्श्य आदर्शपुत्रः सञ्जातः।

एवं युद्धसमये यदा मूर्छितः तदा स्वानुजं रक्षितुं कृतेन कार्येण तथा वनवाससमये भरतः रामलक्ष्मणौ अन्विष्य तौ प्रति आगमनसमये भरतं दृष्ट्वा लक्ष्मणः एवं वक्ति।

''भ्रातः। भरतः नितरां राज्यलाभाय आवां हन्तुं आगच्छति। अतः आयुधानि स्वीकृत्य तं हन्वः'' इति।

तदा रामः, अरे लक्ष्मण! भरतः अमू प्रति राज्यं अर्पयितुं आगतः इति उक्त्वा शमयति। तथा भरतस्यागमनानन्तरं ''कच्चित्'' इति (अरण्यकाण्डे...१००सर्गे) भरतम् अत्यन्तप्रेम्णा स्वाङ्के उपवेश्य कुशलम् अपृच्छत्। तत्प्रसङ्गस्तु रामायणे अत्यद्भुतघट्टेषु एकः।

अतःस्वभ्रातृषु एतादृशी प्रीतिरस्ति, दायित्वम् अस्तीति श्रीरामः आदर्शभ्राता सञ्जातः।

एवमेव स्वभार्यां सीतां स्वप्नेऽपि अविस्मृतः सन् रावणेनापहृतायाः सीतायाः सन्तोषाय कृतैः कृत्यैः श्रीरामः आदर्शभर्ता इत्यपि प्रथितः।

एवं स्वीयप्रजानां पालने रतिः, तथा शत्रुजयशीलत्वं पराक्रमादिक्षत्रियधर्मान् रक्षयन् राट्सु आदर्शः इति प्रसिद्धः।

अतः समस्तमानवप्रपञ्चस्य आदर्शप्रायः इत्येवं मानुषरूपेणैव निरूपितः श्रीरामः विष्णोरवतारः इति बालकाण्डोक्तश्लोकाः प्रक्षिप्ताः इति सन्देहः प्रायः भवत्येव। केचन दाक्षिणात्यकवयः अपि एवमेव अङ्गीकुर्वन्ति।

परन्तु...

१. रामानुग्रहेण सेवकः हनूमान् कथं वा अब्धिं उल्लङ्घितुं शक्नोति?

२. चतुर्मुखब्रह्मणा विशिष्टवरं प्राप्य देवताः पीडितं रावणं सामान्यः मनुजः कथं हन्तुं शक्नोति?

३. सीतास्वयंवरसमये रावणादिमहामहिमैः उद्धर्तुम् अशक्तं धनुः सामान्यः मनुजः कथं भग्नं करोति?

४. क्षत्रियकुलं समूलं नाशयामि इति सङ्कल्पितं परशुरामं भगवत्स्वरूपं जित्वा वैष्णवधनुः कथं मानवमात्रेण प्राप्तुं शक्यते?

५. चतुर्मुखस्य ब्रह्मणः वरवशात् सहस्रमातङ्गबलं प्राप्तवत्याः ताटक्याः हननं मानवः कथं कर्तुं शक्नोति?

६. गौतममहर्षेः शापवशात् पाषाणत्वं प्राप्ताहल्यायाः शापविमोचनं (स्त्रीरूपत्वं) रामस्य पादस्पर्शेण अथवा दृष्ट्या कथं प्राप्तुं शक्यते?

एवं समग्ररामायणे बहवः प्रश्नाः उद्भवन्ति। तेषां समेषां प्रश्नानां समाधानं एकमेव। अपरिमितशक्तिमान्, ब्रह्मादिदेवदत्तवरान्निर्वीर्यान् कर्तुं समर्थः विष्णुरेव, अतः रामः विष्णुरेव इति निश्चीयते। अत एव पूर्वोक्तातिमानवकार्याणि रामेण कृतानीत्यपि।

अयमेव विषयः पुराणेष्वपि प्रथितः। श्रीमद्भागवतसप्तमस्कन्धे ''एकदा ब्रह्मणः पुत्राः... जग्मतुः विष्णुपार्षदौ'' (३८ तः ४५ श्लोकपर्यन्तं) तत्रापि....

**ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवस्सुतौ।**
**रावणः कुम्भकर्णश्च सर्वलोकोपतापिनौ॥**
**तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये।**
**रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो॥**

इति श्लोकौ पश्यामश्चेत् वैकुण्ठस्य द्वारापालकौ जयविजयौ सनकादिमुनिशापवशात् त्रिवारं विष्णुद्वेषिणौ सन्तौ, विष्णुना एव संहारं प्राप्तव्यम् इति तयोः प्रार्थना यथा तथैव रावण-कुम्भकर्णत्वेन जनितौ तौ रामरूपेण अवतीर्य अहनत् इति ज्ञायते।

एवमेव स्कान्दादिषु पुराणेष्वपि प्रथितायां रामाकथायां अपि विष्ण्ववतारः रामः इति वर्तते। अतः बालकाण्डे तत्र तत्र अमुं विषयं ये श्लोकाः प्रतिपादयन्ति ते न प्रक्षिप्ताः। ज्ञानिना वाल्मीकिना रचिताः इति ममाभिप्रायः।

''रमन्ते योगिनः अस्मिन्'' इति व्युत्पत्या... यस्य गुणाः, स्वभावः योगिनां, ज्ञानिनां, मुमुक्षूणां मनः आकर्षयन्ति स एव रामः। अतः रामनामैव तस्य चरितस्य स्फुटदर्पणमिति विचिन्त्यम्।

अतः एव वदन्ति ''रामो विग्रहवान् धर्मः'' इति।

तथा च अस्मिन् पर्वणि रामनामतारकमन्त्रं जपन्तः जीवने धर्मरक्षणाय राममादर्शं स्वीकृत्य धर्मरक्षकाः भवेम॥

**॥धर्मो रक्षति रक्षितः॥**





शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः।



# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री

संस्कृतानुवादः - विद्वान् श्रीकान्ताचार्यः

चरवाणी - ६३६०६९३९९०

भगवद्गीतायाः उपदेशात्प्राक् गीतामृतास्वादानात् प्राक् एतद्गीतामृतम् अस्मान् प्रत्येव इति स्थिरतया निश्चयेन च अवगमावसरो वर्तते। एतदुदिश्य छान्दोग्योपनिषदि एका कथा उक्ताऽस्ति। एकदा चतुर्मुखः महतीं सभां चकार। तस्यां सभायां सभ्यतया श्रोतृतया आगमनाय त्रिविधान् श्रोतॄन् आह्वायमास। देवलोकात् देवान्, पाताललोकात् राक्षसान्, मनुष्यलोकात् कांश्चन मनुजान् आहूतवान्। एतैः सर्वैः मिलित्वा उपविष्टा सभा महती। बहवः उपविष्टा आसन्। ब्रह्मणः आगमनार्थं प्रतीक्षमाणाः सन्ति। ब्रह्मा आगत्य सभायामुपवेशानन्तरं कार्यक्रमारम्भानन्तरं भोः अस्मानाह्वातुं किं कारणम्? इति सर्वे अपृच्छन्। भवन्तः किमपि उपदेशं कुर्वन्तु इति प्रर्थितवन्तः। प्रजापतिः बृहद्विषयमधिकृत्य उपदिशाति इति ते चिन्तितवन्तः। ब्रह्मा तु द द द इति त्रीणि अक्षराणि उच्चारितवान्। किमपि मङ्गालाचरणं कुर्वन्नस्तीति आलोचितवन्तः। 'गुरुर्ब्रह्मा' इति निदेष्टिव्ये एवं वदन्तीति अचिन्तयन्। परमेष्ठी सभातः गतवान्। द-द-द इत्येव उपदेशं स्वीकृतवन्तः सर्वेऽपि स्वस्वलोकं गतवन्तः।

सर्वेऽपि स्वस्वलोकं प्राप्य ब्रह्मणा यदुक्तं तच्चिन्तितवन्तः। देवलोकस्थाः देवाः एवं निर्णीतवन्तः अस्माकं तु अहङ्कारमधिकम्। तदर्थं 'द' इत्यक्तौ 'दमत्वम्' (इन्द्रयनिग्रहत्वम्) इति। पाताललोकस्थाः राक्षसाः 'द' इत्युक्तौ 'दया' इति। यतोहि- राक्षसानामस्माकं कृते क्रूरत्वमधिकम्। किञ्च युद्धेषु क्रूरतया हिंस्यते इति कारणादपि 'द = दया' इति निर्णीतवन्तः। मनुष्यलोकस्थाः मनुष्यास्तु, मनुष्याणां लोभत्वमधिकम्। तदर्थं ब्रह्मा अस्मभ्यं 'द' इत्यनेन 'दानं' उपदिष्टवान् इति निर्णीतवन्तः। लोभत्वं मनुष्याणामधिकमित्यत्र दृष्टान्तः कः? इति चेत् वेदे एकत्र 'तप' इत्युक्तौ किम्? इति बहुधा उक्तमस्ति। तस्मिन् सिद्धान्तपरं वाक्यं किमिति चेत् ''एततं खलु वाव त परित्याहुः यः स्वं ददातीति'' 'तप' इत्युक्तौ दानकरणम्। 'दानं तपः? इति एतादृशाः सन्दर्भाः बहवः सन्ति।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



सप्तलोकान् उदरे धृत! मन्मथजनक! पक्षीन्द्रवाहन! लक्ष्मीपते! कमलाक्ष! अक्षय! ब्रह्मेन्द्रादिसुरवन्दित! जगन्नाथ! राक्षसान्तक! निरपेक्ष! नित्यतृप्त! निरुपम! निस्सीम सदा मां रक्षस्व।

उरगिरि अरसु निम्मचरणगळु कंडम्येले उरगकरिव्याघ्रसिंह।
अरसचोराग्नि वृश्चिकमोदलाद परिपरिय बहुळभयवु।
परम विषलंपटदोळगेना सिहदंते करुणि सुवुदोलिदुदयय
स्मरगधिकलावण्य तंदे पुरंदर विठल शरणजन करुणार्णव।
।।देव।।

हे उरगिरिनाथ! भवतः पादकमलयोः दर्शनानन्तरं सर्प-गज-व्याघ्र-सिंह-राज-चोर-अग्नि-वृश्चिकेभ्यः भीतिः दीरीकृता भविष्यति। अहं विषयरक्तः न भवेयं तथा मां रक्षतु। हे जनक! मन्मथापेक्षया अधिकतरः सुन्दरः भवानेव। हे स्वामिन्! पुरंदर! शरणागतेभ्यः भवान् करुणासागरः भवति।

इंदु नानेनु सुकृतवमाडिदेनो
मंगलमहिम वेंकट चंदमनेगे।।

इत्यादि नवचरणात्मके कीर्तने अद्भुतालङ्कारैः गरुडारूढस्य श्रीनिवासस्य वर्णनं वर्तते। यदि एतद् वर्णनं पश्यामः भगवान् श्रीनिवासः अवश्यम् अस्माकं दृग्गोचरः भविष्यति। माहात्म्यज्ञानपूर्कं भगवन्तं ज्ञातुं शक्यते। एतद् भक्तिलक्षणेषु अन्यतमम्। अतः एव पुरंदरदासवर्याः यद् भगवतः श्रीनिवासस्य विषये ज्ञातवन्तः शृतवन्तश्च तदेवं प्रकारेण अस्माकं कृते वदन्तः भगवन्तं श्रीनिवासं स्तुवन्ति। पुरंदरदासवर्यस्य मनसि श्रीनिवासः अपरः वासुदेवः एव। त्रेतायुगे समागतस्य श्रीराम एव साम्प्रतं त्रिषु लोकेषु विद्यामानानां भक्तानां संरक्षणार्थं वेङ्कटाचले अवतीर्य वेङ्कटेश्वररूपेण स्थितः।

निन्नने नंबिदे नीरजनयन।
एन्न पालिसो इंदिर रमण।।
गैतम मुनिय शापदलि अहल्येयु
पददोळु शिलेयागि मलगिरलु।
पतितपावन निन्न पादसोकि सतियागि।
अतिशयदि भक्तर काय्द नेंबुदकेळि।।

गौतममहर्षेः शापकारणेन अहल्या मार्गे शिला जाता। पतितपावनस्य श्रीरामस्य पादस्पर्शनेन तावत् अहल्या पूर्वरूपं प्राप्तवती। एतद् वृत्तान्तं शृत्वा सः श्रीरामः भवानेव इत्यहं विश्वसिमि। हे नीरजनयन!
इन्दिररमण! मां रक्षतु।

बलवंत उत्थानपादारायन मगन
मलतायि नूकलु अडवि याळगे
जलजाक्ष निन्ननु कुरितु तपविरलागे
सुलभदिंदा तनिगे ध्रुवपदवित्तेंदु केळि।।

बलवतः उत्थानपादनामकस्य राज्ञः पुत्रं ध्रुवं, तस्य कनिष्ठमाता परुषवचनैः अरण्यं प्रेषितवती। तदानीं सः ध्रुवः भवते तपः कृतवान्। भवान् तस्मै ध्रवाय ध्रुवं पदं प्रदत्तवान्, भवान् अपरः वासुदेवः इत्यहं ज्ञातवान्

सुरनरलोकदिपुण्यद जनरन्नु
पोरेयबेकेंदु वेंकुठदिंद
सिरिसहितदिबंदु शेषाचलदिनिंदु
करुण श्रीपुरंदरविठल नेंबुदकेळि।।

देवमानवलोकेषु विद्यामानानां पुण्यजनानां संरक्षणार्थं भवान् देव्या लक्ष्म्या सह अस्मासु करुणां दर्शयन् वैकुण्ठात् अस्य शेषाचलस्य उपरि समागत्य संस्थितः पुरंदरविठलः इति ज्ञातवान्।

(अवशिष्टम् अग्रिमसञ्चिकायां)


अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः।

# पितृभक्तः सोमशर्मा

- श्री कृष्णकिशोरः
चरवाणी - ८५२००४३३०४

सोमशर्मा शिवशर्मनामकधर्मिष्ठस्य पुत्रः धार्मिकः। शिवशर्मणः चतुर्णां पुत्राणां गोलोकगमनानन्तरं सः तस्य अन्तिमपुत्रं सोमशर्माणं अमृतकलशरक्षणे नियोज्य पत्न्या सह तीर्थयात्रां अगमत्। स च दशवर्षाणि यावत् निरतं तपश्चकार। धर्मात्मा सोमशर्मा तु अहोरात्रमनलसः सन् अमृतकलशं ररक्ष। दशवर्षानन्तरं शिवशर्मा पत्न्या सह कुष्ठरोगिरूपं धृत्वा गलितपलितशरीरेण मांसपिण्डवत् स्वधाम आप।

पित्रोः अवस्थां पश्यन्नेव दुःखभरितः तयो पादयोः अनमत्। अथ तयोः व्रणादीन् स्वच्छीकृत्य शय्यायां मृद्व्यां उपवेशयत्। सः अत्यन्तप्ररिश्रमेण परमादरेण च ताभ्यां उत्सृष्टविष्ठामूत्रकफाद्युच्छाटनं, स्नान-भोजन- वस्त्रधारणादिकं च पालितवान्।

किञ्च भुजयोः तौ धृत्वा तीर्थयात्रादिकं कुर्वन्नेव स्वीयनित्यकर्म, हवनं, तर्पणं, देवपूजा इत्याद्यपि कुर्वन् पितृसेवायां निरतः पित्रोः उत्तमभोजन-सुन्दरवस्त्र-सुगन्धिततताम्बूलादीन् स्वेच्छानुगुणं पयः -पुष्पादीन् च दत्वा तौ तोषयितुं प्रयतमानः आसीत्।




किन्तु पिता शिवशर्मा कठोरवचनैः, दुर्भाषया, ताडनेन पीडयति चेदपि क्रोधवर्जितः सन् तनु-मन-वचोभिः पितरं पूजयामास। अनन्तरं मायाशक्त्या कलशे विद्यमानममृतम् अदर्शनं कृत्वा वदति, हे शिशो! त्वामेकं रोगनिवारकम् अमृतं कलशे रक्षितुं दत्तवान् खलु, तदानय! पातुम् इच्छामि इति।

सोमशर्मा अमृतकलशं पश्यति सति तस्मिन् बिन्दुरप्यमृतं न ददर्श। तदा निष्ठागरिष्ठः मनसि अचिन्तयत् - मयि सत्यनिष्ठता गुरुशुश्रूषादिसत्वे, अहं निश्चलभावेन तपश्चकार चेत्, इन्द्रियसंयम शौचादिसमस्ताचारधारकश्चेत् इदं कलशं पीयूषपूर्णं भवेत् इति वदति। अथ तस्य अक्षणः प्रत्येव पीयूषपरिपुष्टमभवत् तत्कुम्भम्। तेन अत्यन्त सन्तुष्टः पितरं प्रति तदनयत्।

ततः धर्मिष्ठे पुत्रे प्रसन्नचित्तः शिवशर्मा पत्न्या सह स्वीयं कृत्रिमं कुष्टरोगिस्वरूपं विहाय पूर्ववदभवत्। सोमशर्मा तयोः चरणनलिनानि अवन्दत। स्वीयतपोयोगप्रभावेण पत्नीपुत्रसमेतः शिवशर्मा विष्णुगेहमवाप।

**नीतिः** - ये च मातापित्रनुग्रहपात्राः, सत्कर्मादीनाम् अनुष्ठातारः, भगवद्भक्ताः धर्मपरायणाः ते महात्मानः भवन्ति। तथा च - ''ऋषीणां पुनराद्यानां वाचमर्थोनुधावति'' इत्युक्तदिशा तेषां वचनं कथमपि सत्यमेवायाति।

तथैव वयमपि प्रतिदिनं मातापित्रादिवन्दनं, नित्यकर्मानुष्ठाय सोमशर्मा इव यत्किञ्चित् वाक्शुद्धतामवाप्नुमः।।



# सर्वेषां मुक्तिः


तेलुगु मूलम् - डॉ.श्रीनिवासदीक्षितुलु
संस्कृतानुवादः - श्री.बि.शिवकुमारः
चित्राणि - के.द्वारकानाथः


तिरुकोट्टियूर्ग्रामे गोष्ठीपूर्णनामानः महापण्डिताः आसन्। पेरियनम्बि आज्ञानुसारं रामानुजाचार्याः तेषां दर्शनार्थं गत्वा....

आचार्याः! दासोऽहं युष्माकम्। मह्यं तिरुमन्त्रं अनुगृह्णन्ति वा?



गोष्ठीपूर्णाः विमुखिनः अभवन्

पेरियनम्बि मां अगमयत्

आम् ....



पञ्चपर्यायाणां अनन्तरं गोष्ठीपूर्णाः...

त्वयि अभिसन्धानादयः अवलोकनीयाः

अवश्यम् आचार्याः!



श्रीरामानुजाः सप्तदशवारं तिरुमन्त्रोपदेशार्थम् आचार्यं प्राप्ताः चेत् अपि निष्फलाः विरक्ताः सन्तः शिष्यान् प्रति.........

इतः परम् मे उपदेशो न लभ्यते

आचार्य! उद्विग्नो मा भव!



परम् एकस्मिन् शुभदिने शिष्येण रामानुजाय उपदेशार्थं सत्वरम् आगन्तुं सूचनां गोष्ठीपूर्णाः प्रेषितवन्तः। महदानन्देन १८ वारं रामानुजाः अगच्छन्। गोष्ठिपूर्णाः तेन....

कीदृशसन्दर्भेष्वपि एतत् मन्त्रं बहिर्गतं न भवेत्

आम्! स्वामिन्!



यतिराज! ऐतत् परमरहस्यमन्त्रम्! गोप्यतया रक्षणीयम्

तथैव आचार्यवर्य!

रामानुजाय गोष्ठीपूर्णाः तिरुमन्त्रम् उपदिदिशुः



उपदेशानन्तरं रामानुजाचार्याः सम्यग् विचिन्त्य, स्वार्थचिन्तनातः वरं लोककल्याणमिति अभिप्रयन्ति। शिष्यास्तान् कीर्तितवन्तः।




सत्वरं आचार्याः आलयगोपुरम् आरुह्य सर्वानाहूय अष्टाक्षरीमन्त्रम् उपदिदिशुः




परं गोष्ठीपूर्णाः रामानुजान् आहूय कोपेन अभितर्जयन्ति...




तदाकर्ण्य गोष्ठीपूर्णाः ....




महदानन्देन गोष्ठीपूर्णाः रामानुजान् आलिङ्गन्ति।

यतिराज! मम स्वामिन्! अहो मम भाग्यम्।

एम्बेरुमानार्

तयोः गुरुशिष्ययोः सर्वोऽपि लोकः अनमत्



लोकाः समस्ताः सुखिनो भवन्तु।

# रसप्रश्नाः

१. रामायणे कति सर्गाः?

अ. ५४०  आ. ५००

इ. ६००  ई. ५५०

२. रामायणे कति काण्डानि सन्ति?

अ. ५  आ.६

इ. ७  ई. ८

३. रामायणे कति श्लोकाः वर्तन्ते?

अ. २४०००  आ. १२०००

इ. २५०००  ई. २४२००

४. वाल्मीकेः वास्तविकं नाम किम्?

अ. रत्नाकरः  आ. सुधाकरः

इ. विष्णुशर्मा  ई. चारुदत्तः

५. रामायणं कस्मिन् युगे लिखितम्?

अ. कृते  आ. त्रेतायां

इ. द्वापरे  ई. कलौ

६. वाल्मीकिरामायणस्य अपरं नाम किम्?

अ. राक्षसवधः  आ. सीताप्राप्तिः

इ. पुलस्त्यवधः  ई. रामकथा

७. श्रीरामः कस्मिन् वंशे उत्पन्नः?

अ.इक्ष्वाकुवंशे  आ.पुलस्त्यवंशे

इ. चन्द्रवंशे  ई. लिकुचवंशे

८. भरतस्य पत्नी का?

अ. माण्डवी  आ.तारा

इ. श्रुतकीर्तिः  ई. सिंहिका

९. रावणस्य मातुः नाम किम्?

अ.कैकेयी  आ.कैकशी

इ. विरूपाक्षी  ई. श्यामला

१०. हनुमतः मातु नाम किम्?

अ.शिवानी  आ.छात्री

इ. अञ्जनी  ई. छाया

उत्तराणि - १.आ २. इ ३. अ ४. अ ५.आ ६. इ ७. अ ८. अ ९. आ १०. इ

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?

उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।





Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.



लोककल्याणाय २८-०३-२०२१ दिनाङ्के
ति.ति.दे. परिपालनभवनप्राङ्गणे
रङ्गमञ्चे (तिरुपति)
तिरुमलतिरुपतिदेवस्थानपक्षतया
वैभवेन आचरितयोः
फाल्गुणलक्ष्मीवैभव-लक्ष्मी जयन्ती
महोत्सवयोः दृश्यमालिका













